अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३७.

# आशौचाष्टकं

श्रीवररुचिप्रणीतं,

व्याख्ययासहितं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोळम्बाब्दाः १०८९, क्रैस्ताब्दाः १९१४.

# PREFACE.

**Âsauchâshṭaka** is ascribed to the famous author Vararuchi of whom a brief mention was made in the preface of Vâraruchasangraha, No. XXXIII of the Trivandrum Sanskrit Series.

The name of the commentator is not known. but considering the force and dignity of the style of the commentary, we may take it to have been written by a very ancient author. The appearance of the manuscript itself will entitle it an age of some 300 or 400 years. The commentary quotes Manu and other well-known authors of Smritis, an author of a Bhâshya on Yâjnavalkya, the Nirnayakâra and the work Shat-trimsanmata and Bhishak-Sâstra. It also quotes one Sahasraswâmin, a hitherto unknown author of a code of law.

The work was edited with the help of a correct palm-leaf manuscript in Malayalam character, obtained from Mr. Subrahmanyan Namburipad of Ezhumavu Manakkal, Kadutturutti.

TRIVANDRUM. T. GAṆAPATI SÂSTRÎ.

# निवेदना ।

---

आशौचाष्टकस्य प्रणेता तत्रभवान् **वररुचिः** । अनन्तशयनसंस्कृतग्रन्थावल्यास्त्रयस्त्रिंशाङ्कस्य **वाररुचसङ्ग्रहस्य** निवेदनायां **वररुचिम**न्तरेण किञ्चिन्निवेदितम् ।

आशौचाष्टकव्याख्यायां तत्प्रणेतुर्नामधेयं न दत्तम् । किन्तु तस्यां प्रकाशमानाया अतिप्रौढेः पर्यालोचनया स पुरातन इत्यूहितुं शक्यते । व्याख्यादर्शग्रन्थस्यैव तावत् त्रिचतुरशतवर्षवृद्धत्वं प्रतिभासते । अस्यां **मन्वादयः** प्रसिद्धाः स्मर्तारः **षट्त्रिंशन्मतं निर्णयकारः** याज्ञवल्क्यस्मृतिभाष्यकारा **भिषक्छास्त्रं** च स्मर्यन्ते । अश्रुतपूर्वः कश्चित् स्मृतिकारोऽपि स्मर्यते **सहस्रस्वामीति** ।

तालपत्रात्मकं केरलीयालिपिम् (एळुमामनक्कल्) श्रीसुब्रह्मण्यनम्बूरिप्पाडुसकाशाद् अधिगतं शुद्धमादर्शग्रन्थमाश्रित्यैतत्संशोधनं निर्वर्तितम् ।

अनन्तशयनम्. त. गणपतिशास्त्री.

॥ श्रीः ॥

श्रीवररुचिप्रणीतम्

# आशौचाष्टकं

सव्याख्यम् ।

---

भगवन्तं मनुं याज्ञवल्क्यं योगीश्वरं नतः ।
अज्ञानतिमिरान्धानां जनानां दृष्टिशुद्धये ॥

अष्टकश्लोकमूच्यप्रबंधनं कृतवान् हि यः ।
तं च नत्वा वररुचिं तदर्थं विवृणोम्यहम् ॥

आशौचाष्टकगीतार्थतत्त्वसम्प्रतिपत्तये ।
परम्पराभिदागूढवाक्या(र्थे:र्थ)स्फूर्तिहेतवे ॥

आशौचं तावद् द्विप्रकारम् — अस्पृश्यत्वलक्षणम् अधिकाराभावलक्षणं च । तत्रास्पृश्यत्वलक्षणं चण्डालादिस्पर्शजन्यं स्नानादिकर्मणाप(वृत्ते:वर्तत इ)ति लोकतः शास्त्रतश्च सिद्धम् । कर्माधिकाराभावलक्षणस्य किं निमित्तं, तत् कीदृशस्य पुंसः स्यात् , तस्य केन वापगमः इति चापेक्षायामाह —

**नाम्नः प्राग् दन्तजातेरुपनयनविधे-**
**राप्लवोऽहस्त्रिरात्रं**
**ज्ञातेरूर्ध्वं दशैतत् सहभुवि तु कृते**
**नाम्नि पित्रोः सदैव ।**

स्त्रीषु क्षौराष्टमाब्दादुपयमनविधेः
पूर्ववत् सन्निधौ स्या-
न्मातुस्तन्माससङ्ख्यासमदिनमुभयो-
रुद्भवे गर्भनाशे ॥ १ ॥

**नाम्नः प्रागित्यादि ।** अधिकाराभावलक्षणस्य जन्ममरणे निमित्तम् । तत्र जन्मनिमित्तान्मरणनिमित्तस्य गुरुत्वात् प्रथमं तदुक्त्वा तन्न्यायं जन्म(निमित्त)स्यातिदेक्ष्यति । कस्माज्जन्म-निमित्तान्मरणनिमित्तस्य गौरवम् । 'सूतकाद् द्विगुणं शावम्' इत्यादिस्मृतेः । जातस्य नाम्नः प्राङ् नाशे आप्लवः शोधन इत्यन्वयः । जातस्य नाश इति कुतो लब्धम् । नाम्नः प्रागिति लिङ्गाद् गर्भनाश इति वक्ष्यमाणत्वाच्च । गर्भनाश इत्यत्र नाशशब्दस्य सिंहावलोकितन्यायेनापकृष्य योजना । जातस्य नाश इति सिद्धम् । नामशब्देन नामकरणं लक्ष्यते । तेन च लक्षितलक्षणया तत्कालो गृह्यते । कुतो मुख्यार्थं विहाय लक्ष-णाङ्गीक्रियते । उपनयनविधेरिति वक्ष्यमाणस्य विधिशब्दस्य लिङ्गत्वात् । तेन नामकरणकालात् प्रागित्यर्थः । नामकरण-स्यापि द्वादशाहो मुख्यः कालः, 'द्वादश्यां सुमुहूर्ते वा', 'द्वादशे षोडशेऽपि वा' इति च ज्योतिःशास्त्रदर्शनाद् ,

"नामधेयं दशम्यां तु द्वादश्यां चास्य कारयेद्"

इति मनुवचनाच्च । सर्वत्र द्वादशाहस्योक्तत्वात् स एव मुख्यः कालः । आप्लवस्य शोधनत्वं कुतो लब्धम् । द्वितीयश्लोकोपसं-हारस्थस्य शुद्धिपदस्यात्रान्वययोग्यतार्थं प्रत्ययविपरिणामेन सिं-

ह्यवलोकितन्यायापकृष्टस्याप्लवविशेषणत्वेन शोधन इत्यन्वयात्। तर्ह्यत्राप्लवकर्मणा शुद्धिः। न। आप्लवशब्दस्य काललक्षणार्थत्वात्। कथं लक्षणाश्रीयते। गौतमेन 'बाले देशान्तरे'त्यादिना सद्यः शौचविधानात्। तर्ह्याप्लवशब्देन नाशौचमुच्यते। किं तर्हि, आशौचापगम इति चेद्, न। यस्मिन् क्षण इन्द्रियोपलब्धिमरणस्य, तस्मिन् क्षण आशौचमिति। तर्हि सद्य इति वक्तव्यमिति चेत्, कालकर्मभ्यामुभाभ्यां शुद्धिरित्याप्लवशब्देनोपदेशः। इह यथाप्लव उक्तेऽपि कालस्याङ्गीकरणं, तथोत्तरत्र कालोक्तावपि कर्माङ्गीकर्तव्यम। सर्वत्रोभाभ्यां शुद्धिरिति द्रष्टव्यम्। दन्तजातेः प्रागहः शोधनम्। दन्तजातिशब्देन दन्तजातेः कालो लक्ष्यते। दन्तजातिर्दन्तानां जन्म। तस्य कालः। प्रागुपरिष्टाच्च कालोपदेशात्। दन्तजन्मनो भिषक्शास्त्रे कालद्वयमभिहितं—

"दन्तोत्पत्तिः कुमारस्य षण्मासे वत्सरेऽपि वा"

इति। तत्र संवत्सरे सर्वेषां दन्तोत्पत्तिरिति संवत्सर एव मुख्यतया ग्राह्यः। ततः संवत्सरात प्रागहः शोधनम्। अह्नोऽन्त आप्लवाच्छुद्धिरित्यर्थः। उपनयनविधेः प्राक् त्रिरा(त्रं) त्रिदिनं शोधनम्। तत्रापि मुख्यतयाष्टमाब्दः परिगृह्यते। उपनयनविधेः उपनयनकालात्। त्रिरात्रान्ते आप्लवाच्छुध्यतीत्यर्थः। (ततः प)रं दशरात्रम्। यद्यष्टमे नोपनीयेत, तदापि ततः परं दशरात्रेणैव शुध्यति। संस्कारेण कालस्य लक्षितत्वात्। यद्यप्यष्टमात् प्रागेवोपनीयेत, तदापि दशरात्रं गृह्णीयात। संस्कारेण कालो लक्ष्यते यतः, अतो मुख्यार्थातिक्रमो न युक्त इति। कीदृशस्य

पुरुषस्य इत्याकाङ्क्षायां परिहारमाह—ज्ञातेरिति । आसप्तमात् सपिण्डतया, आदशमात् समानोदकतया च युक्ताः सामान्येन गृह्यन्ते ज्ञातिशब्देन ।

"सप्तमाद् दशमाद्वापि ज्ञातयोऽ*भ्यवयन्त्यपः"

इति याज्ञवल्क्यवचनात् ।

ज्ञातिसामान्येनाशौचे प्राप्ते विशेषमाह—एतदित्यादि । एतत् सहभुवि प्रेते नामकरणाद्येव स्यात् । तुशब्दो विशेषवाची । सहभुवां विशेषेणाशौचविशेषमाह—(सहभुवीति । सह) भवतीति सहभूः । सहभूत्वमपि त्रिप्रकारम्—एकोदरभूतत्वम्, एकबीजभूतत्वम्, एकमातापितृबीजसंस्कारभूतत्वमिति । तेष्वेकोदरभुवां दशरात्रं नामकरणाद्येव । एकबीजभुवां दन्तजन्मन आरभ्य । एकबीजसंस्कारभुवां चौलादारभ्य ।

"भिन्नोदराणां दन्ताढ्ये भ्रातृणामथ संस्थिते ।
दशाहं कृतचौले तु दत्तादीनां विधीयते ॥"

इति वचनात् । एतद् दशरात्रं पित्रोः सदैव मातापित्रोः । 'पिता मात्रा' (१. २. ७०) इत्येकशेषः । सदा (एका?) एकादशेऽहन्यपि । एवं तर्हि प्रागिति वक्तव्यम् । न सदेति वक्तव्यमिति चेद् । अन्तर्दशाहेऽपि मृते मातापित्रोर्दशरात्रम् । नन्वन्तर्दशाहे मृते सूतकेन शावं गच्छति,

"एक एव निमित्तं चेद् भवेत् सूतकशावयोः ।
तच्छावं सूतकेनैव तेन पित्रोरपि व्रजेत् ॥"

---

* 'अभ्युपयन्त्यप' इति याज्ञवल्क्यस्मृतौ पाठो दृश्यते ।

इति वचनात् । शावमपि सूतकेनैव गच्छतीति तस्यार्थः, अपिशब्दस्यापकर्षात् । तस्मात् सदेति शब्दोऽनर्थक इति । नानर्थकः । जातस्यान्तर्दशाहे मरणं यदि न ज्ञायेत, सूतकेऽपवृत्ते च पुनर्ज्ञायेत, तदा शावशेषं गृह्णीयादिति । एवकारेणैतदेव स्पष्टीकृतम् ।

इदानीं पुरुषमृतावुक्तं स्त्रीमृतावतिदिशति — **स्त्रीष्वि**त्यादि । स्त्रीषु नष्टासु मृतासु पूर्ववत् पुरुषमृतिवत् । समस्तातिदेशे प्राप्ते विधिविशेषमाह — **क्षौराष्टमाब्दादुपयमनवि**धेरिति । क्षौरविधिश्चूडाकर्म । तेनापि काल उच्यते । 'तृतीये वत्सरे चूडाकर्मे'ति वचनात् कालोऽपि तृतीयोऽब्दः । तृतीयाब्दात् प्रागाप्लवः । अष्टमाब्दात् प्रागहः । क्षौराष्टमाब्दादिति द्वन्द्वैकवद्भावः । उपयमनविधेः प्राक् त्रिरात्रम् । उपयमनं विवाहः, तस्य काल उपयमनविधिः । उपयमनकालात् प्रागित्यर्थः । स च द्वादशाब्दः । 'प्रदानं प्रागृतोः' इति गौतमवचनात् । ऋतुश्च द्वादशाब्दे, 'सा च द्वादशाब्द ऋतुं पश्यती'ति श्रुतेः । (विसमास ? विधिः संस्कारः), स्त्रीणामुपयमनस्यैव संस्कारजनकत्वात् । तत एवोपयमनविधेरिति विधिशब्दोऽपि प्रयुक्तः । तथा चाह मनुः —

"वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः"

इति । गर्भक्रियाः परिज्ञात एव प्रवर्तन्ते । नामकरणादयोऽपि तूष्णीं व्यवहारार्थं प्रवर्तेरन् । तथा च याज्ञवल्क्यः —

"तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः"

इति । अवधित्रयमेव विशेषः स्त्रीमृतौ । इतरत् सर्वमतिदेशात् पुरुषमृतिसमानमेव । आशौचकालेऽतिक्रान्ते किं स्यादित्याशङ्क्याह — **सन्निधाविति** । सन्निधावेव । देशान्तरे बालमृतौ नाशौचम् । अनेनातिक्रान्ते बालाशौचकाले बालमरणे श्रुते नाशौचमित्युच्यते । तथा च स्मृतिः —

"तुल्यं वयसि सर्वेषामाशौचं परिकीर्तितम् ।
उपनीते तु विषमं तस्मिन्नेवातिकालजम् ॥"

इति । जातमरणे आशौचमुक्तम् । गर्भनाशे किमाशौचमस्ति, उत नास्ति । यदि स्यात्, तर्हि ज्ञातीनां सामान्येन स्याद्, उत नेत्याशङ्क्याह — **स्यादि**त्यादि । गर्भनाशेऽप्याशौचं तन्मातुरेव, न पित्रादीनाम् । कस्मात् । तस्या एव गर्भसन्निहितत्वात् । जातस्यैव हि पित्रादिभिः सह सम्बन्धः । इममेव न्यायमङ्गीकृत्य स्यादित्युक्तम् । तत् कियदित्याशङ्क्याह — **तन्माससङ्ख्यासमदिनमिति** । तस्य गर्भस्य माससंख्या याव(न्ति? ती) तावन्ति दिनानि । तन्माससङ्ख्यास(म? मानि) दिनानि यस्मिन्निति विग्रहः । आशौचविशेषणत्वादेकवचनम् । चतुर्षु मासेषु त्र्यहमाशौचं, तत्र हि गर्भस्रावो न नाश इति । पञ्चमषष्ठसप्तमेषु माससमानि दिनानि । तथा च गौतमः—'गर्भसमा रात्रिः स्रंसने गर्भस्य त्र्यहं वे'ति । अष्टमादिषु दश दिनानि । तत्र प्रसवकालत्वात् । अ(प)प्रसव इति समाख्या नाश इति । उभयोः

स्त्रीपुंसयोः । अनेनापि नाशशब्देन गर्भपतनमुच्यते, न स्राव इति ज्ञापयति। यस्मात् पतन एव स्त्रीपुं(स)व्यक्तिः सम्भवति। उद्भवे उद्भूते । कर्तृव्युत्पत्त्या गर्भनाश उद्भूत इत्यन्वयः । केचिद् — गर्भनाशे मातुः, उद्भवे मातापित्रोरिति वर्णयन्ति । तदयुक्तम् । उद्भवे ज्ञातीनामप्याशौचविधानात् । तर्हि उद्भवशब्देनापप्रसवगत इति चेत्, तदयुक्तम् । अपप्रसवस्यापोद्भवत्वात् । तस्मादुभयोरिति स्त्रीपुंसयोरित्येव युक्तम् ॥

अथवान्या व्याख्या स्यान्मातुरित्यादः। गर्भनाशे मातुः, पूर्वं ज्ञातीनां सामान्येनोक्तत्वात्। (मास)सङ्ख्या गर्भनाशे मातुरेव, न पित्रादीनामिति। स्यादित्यनेनोपपत्तिं ज्ञापयति—यस्मान्माता गर्भधारिणी, तस्मान्मातुरेव भवितुमर्ह(ती?)त्याशौचमिति। तत् कियदित्यपेक्षायामाह — **माससङ्ख्यासमदिनमिति** । मासतुल्याहोरात्राणि * । पूर्ववदेव विग्रहः । माससमदिनमित्येतावतैव सिद्धत्वात् सङ्ख्याशब्दोऽनर्थक इति चेद्, न । सङ्ख्येयगर्भनाश एव मासतुल्यान्यहोरात्राणि । पूर्वम् आ चतुर्थान्न गर्भस्य माससङ्ख्येयत्वं, सन्दिह्यमानत्वात् । तथा च लौकिकाः पठन्ति — एतावन्ति दिनानि न रजः प्रवृत्तम् । गर्भोऽस्ति उत नास्तीति न जानीम इति । अत आ चतुर्थात् त्रिदिनं द्रष्टव्यम् । तथा च गौतमः — 'गर्भमाससमा रात्रिरि'त्यादि उभयोः स्त्रीपुंसयोरिति पूर्ववत् । उद्भवे उद्भवकाले जन्मकाले गर्भनाशे तदिति व्यवहितेनान्वयः । प्रसवकाले गर्भनाशे तद्

---

* इह पुंस्त्वं युक्तम् ।

जन्माशौचमेव भवतीत्यर्थः। अष्टमादीनां प्रसवकालत्वं शारीरव्याख्यातृभिरुक्तम्। अष्टमात् पुरैव सकलावयवोत्पत्त्युपदेशाद् उपरि प्रसवकालत्वोपदेशाच्च। तथा च याज्ञवल्क्यः—

"अष्टमे मास्यतो गर्भो जातः प्राणैर्विमुच्यते"

(इति)।

"नवमे दशमे वापि प्रबलैः सूतिमारुतैः।
निस्सार्यते बाण इव यन्त्रच्छिद्रेण सज्वरः॥"

इति च॥

इति प्रथमश्लोकः।

---

ज्ञातिमरण आशौचमुक्तम्। आशौचस्य कर्मानधिकारलक्षणत्वात् सर्वकर्मण्यधिकाराभावे प्राप्ते प्रेतकर्मण्यधिकारविधित्सयाह—

ऊने द्वाभ्यां समाभ्यां न जलहुतवहौ
नामचौलान्तराले
कामं वोर्ध्वं तु कार्यौ गुरुलघुदिनसं-
वर्धने पश्चिमे न।
आ शुद्धेः स्याद् दशाहत्रिदिनदिनविधि-
र्व्यत्यये त्रीणि पूर्वं
स्नानं शिष्टेऽब्दतः प्रागुपरि तु सकले
स्नानमात्रेण शुद्धिः॥ २॥

ऊने द्वाभ्यामित्यादि। ज्ञातिमरणे जलहुतवहौ कार्यौ कर्तव्यौ। जलमुदकम्। तेनोदकदानं लक्ष्यते। हुतवहोऽग्निः।

तेन च संस्कारो (व?) लक्ष्यते। तुशब्दो विशेषवाची। स उत्कृ-ष्य योज्यः कार्यौ त्विति। जलहुतवहयोः सामान्येन कार्यत्वेऽपि हुतवहो ज्ञातीनां सन्निकृष्टेनैकेन कार्य इति। तथा चाह—

"उदकं पिण्डदानं च सायंप्रातस्तु पुत्रकः"

इति। अत्र चशब्देनाग्निसंस्कार उच्यते। उदकदानं सर्वैः सपिण्डैः कर्तव्यम्। तथा चाह—

"दग्ध्वा मृतं सपिण्डास्तु सकृद् दद्युर्जलाञ्जलिम्"

इति। दग्ध्वेति दाहानन्तरमेव न पूर्वम्। नात्र समानकर्तृ(क)त्वं विवक्षितमिति। ततश्चोदकक्रियैव सर्वैर्ज्ञातिभिः कर्तव्या। तथा च याज्ञवल्क्यः—

"सप्तमाद् दशमाद्वापि ज्ञातयोऽभ्यवयन्त्यपः"

इति,

"सकृत् प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः"

इति च। मृतस्य सर्वस्यापि संस्कारोदकदानयोः प्राप्तयोरपवादं ज्ञातिविशेषेण तद्विशेषं चाह—**ऊन** इत्यादि। द्वाभ्यां समा-भ्यामूने न। द्वाभ्यां संवत्सराभ्यामसम्पूर्णे बाले मृते संस्कारो-दकदाने न कार्ये। असम्पूर्णद्विवर्षस्य संस्कारोदकदानयोः प्रति(षेध? षिद्ध)त्वात् तत्करणे प्रत्यवाये प्राप्त आह—**नाम-चौलान्तराले कामम्**। नामकरणचौलयोर्मध्ये कामम् इच्छातः। तर्हि मरिचभक्षणादिवदिच्छातः प्रवृत्तेः शास्त्रीयत्वं न भवतीति चेद्, न। शास्त्राभ्युपगमे शास्त्रीयत्वम्। शास्त्रीयत्वे

किं फलम् । करणेऽभ्युदयः, अकरणे प्रत्यवायाभावश्च । पित्रादीनां सर्वेषामेवं प्राप्त आह — वा विकल्पेन । मातापितृभ्यां दन्तजन्माद्येव कर्तव्ये, प्राक् कामतः । पूर्णद्विवर्षस्यैव ज्ञातिभिः कर्तव्ये, प्राक् कामतो दन्तोत्पत्तेः परम् । तथा च गौतमः—

"उदकदानं सपिण्डैः कृतजटस्य दन्तजन्मादि मातापितृभ्याम्"

इति । ऊर्ध्वम् । तुशब्दोऽत्रापि सन्निकर्षात् सम्बध्यते । उपनयनादूर्ध्वमावृतैवाग्निसंस्कारः कर्तव्यः, न पूर्ववद् यथाकथञ्चित् कर्तव्य इत्यर्थः । तथा च याज्ञवल्क्यः—

"यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना ।
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥"

इति । संस्कारादिविधेः पूर्वमपवादश्छन्दोनुरोधात् । आशौचस्य कर्मानधिकारलक्षणस्य ज्ञातिसामान्येनोक्तत्वाच् शवसंस्कर्तुराशौचाधिक्यं प्राप्नोतीत्याशङ्क्याह—**गुरुलघुदिनसंवर्धने पश्चिमे नेति** । पश्चिमे द्वितीये अग्निसंस्कारे, पूर्वं जलहुतवहाविति पठितत्वात् । तस्मिन् कृते गुरुदिनस्य त्रिदिनस्य, लघुदिनस्य दिनस्य च वर्धने न स्तः । दिनस्य त्रिदिनत्वं, त्रिदिनस्य दशाहत्वं च नास्तीत्यर्थः । तर्हि किं संस्कर्तुर्ज्ञातितो न विशेषोऽस्ति । उच्यते । कालाधिक्यं नास्ति, समुपसर्गप्रयोगात् । किन्त्वस्पृश्यत्वे विशेषोऽस्ति, दाहकत्वात् । अनेन

बालविषय आशौचाधिक्यापवादेनोर्ध्वं संस्कारेणाशौचाधिक्यमस्तीति ज्ञापयति। तथा च मनुः—

"अह्ना चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः।
प्रेतस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिनः॥"

इति। संवर्धने इति द्विवचनं दशाहस्य क्वचिदप्याधिक्यं नास्तीति ज्ञापनार्थम्। किं दशाहाद्युक्तमाशौचमेकदेशेऽतिक्रान्ते ज्ञाते मरणप्रभृति उत ज्ञानप्रभृति ग्राह्यमित्याशङ्क्याह— **आ शुद्धेरिति**। अन्तरा ज्ञातं चेद् ज्ञानप्रभृति शिष्टकालेनैव शुद्धिः। आ शुद्धेः शुद्धिकालात्। शुद्धिकालः सङ्गवः,

"अघभाजः सङ्गवे स्नात्वा ग्रामं प्रविशेयुः"

इति वचनात्।

"अहस्त्वपररात्रादि न तु सूर्योदयादिकम्।
द्वितीयसङ्गवान्तं तदेकाहाद्यघसङ्ग्रहः॥"

इति च स्मरणात्। यस्मिन् दिने सङ्गवः शुद्धिकालः, तस्मादा शुद्धिकालात्। आङत्राभिविध्यर्थः। तस्मिन् सङ्गवेऽतिक्रान्ते शुध्यतीत्यर्थः। **स्याद् दशाहत्रिदिनादिनविधिः**। दशाहं त्रिदिनं दिनं च दशाहत्रिदिनदिनानि, तेषु विधिर्दशाहत्रिदिनदिनविधिः। उदकक्रियादिकं विधिं कर्तुमाशौचकाल एव श(नो? क्नो)ति चेच्छेषेणैव शुध्यति। विधिरपि मन्वादिभिरुक्तः। यथाह—

"दग्ध्वा मृतं सपिण्डास्तु सकृद् दद्युर्जलाञ्जलिम् ।
सायंप्रातस्तु कुर्वीरन्नेवमा दशमाद् दिनात् ॥"

इति,

"उदकं पिण्डदानं च सायंप्रातस्तु पुत्रकः ।
कुर्यादाशौचकाले तु न चेत् कृत्वा शुचिर्भवेत् ॥
पिण्डोदकेऽपकर्षेच्च स्वल्पकालमघं यदि ।
भविष्यत्पिण्डनिर्वापे पृथक् तन्त्रं न चाश्रयेत् ॥
ब्रह्मचारी यदा कुर्यात् पिण्डनिर्वपणं पितुः ।
तावत्कालमशौचं स्यात् ततः स्नात्वा विशुध्यति ॥
ब्रह्मचारी यदा कुर्याच्छवनिर्हरणं पितुः ।
मुक्त्वा स्वाध्यायमन्यत् तु नित्यकर्म समाचरेत् ॥
आचार्यं पितरौ मुक्त्वा सपिण्डान् न दहेद् व्रती ।
अन्यांस्तु दहतः सद्यो व्रतं नश्यति कामतः ॥"

इत्यादिको विधिरिति । दशाहादौ समस्तेऽतीते कथं स्यादित्यत आह—व्यत्यय इत्यादि । व्यत्यये समस्तस्यातिक्रमे । पूर्वे दशाहेऽतिक्रान्ते त्रीणि दिनानि गृह्णीयात् । तेषु दिनेषु दशाहविहितपिण्डोदकक्रियाश्च कुर्यात् । तथा चाह—

"प्रथमेऽह्नि तत्पिण्डं द्वितीये चतुरस्तथा ।
तृतीये पञ्च वै कुर्यादेष पिण्डविधिः स्मृतः ॥"

इति । तदिति प्रथमदिनसम्बद्धं पिण्डं, चतुर इति चतुर्दिनसम्बद्धान् पिण्डान्, पञ्चेति पञ्चदिनसंबद्धान् । पिण्डशब्द उद-

कदानस्याप्युपलक्षणार्थः । शिष्टे त्रिदिनदिनयोरतीतयोः । स्नानं स्नानात् पूर्वं पिण्डोदकक्रियां कृत्वा स्नात्वा शुध्यतीत्यर्थः । अतिक्रान्ते किं सदैव (त)दित्याशङ्क्याह—**अब्दतः प्रागिति।** कालातिक्रम उक्तो विधिरब्दतः संवत्सरात् प्रागेव । अत ऊर्ध्वं कथं स्यादित्याशङ्क्याह—**उपरि तु सकल** इत्यादि । उपरि संवत्सरादूर्ध्वम् । स्नानमात्रेण शुद्धिः । स्नानमात्रेणेति मात्र-शब्देन उदकक्रियादिव्यावृत्तिः । उदकक्रियादिं मुक्त्वा केवलं स्नानेन शुध्यतीत्यर्थः । पिण्डकर्तुः प्रेतस्य पिण्डविच्छेदादेतन्न युक्तमित्यत आह—**सकल** इति । पिण्डकर्तृत्वे सत्यपि स्नाने-नैव शुध्यतीत्यर्थः । तर्हि मातापित्रोरपि स्नानमात्रमेव प्राप्नोति । न । तुशब्दो विशेषवाची । अयं विशेषः—महागुरुषु प्रेतेषु संवत्सरादूर्ध्वमपि सर्वमौर्ध्वदेहिकं कर्तव्यमिति । तथा च स्मृतिः—

"महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना ।
अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि ॥"

इति ॥

इति द्वितीयश्लोकः ।

---

जननमरणनिमित्ताशौचस्य चण्डालादिस्पर्शजन्यवदितरस्पर्शायोग्यत्वम्, उतान्यद् वा लक्षणमित्याशङ्क्याह—

**विश्लिष्टा न स्पृशेयुर्मृतसविधनरान्**
**दाहकं ते च तेषा-**

**मन्योन्यं नैव भुक्तिर्मरणदिवसतो-**
**ऽनाहिताग्नेर्दशाहम् ।**
**आशौचं त्वाहिताग्नेर्दहनदिवसतः**
**सञ्चयादूर्ध्वमस्थना-**
**मङ्गस्पृष्टौ न दोषस्तदपि निगदितं**
**ब्राह्मणानां चतुर्थे ॥ ३ ॥**

**विश्लिष्टा** इत्यादि । विश्लिष्टाः सपिण्डसमानोदकव्यतिरिक्ताः । ते मृतसविधनरान् न स्पृशेयुः । मृतस्य सविधा नरा मृतसविधनराः । विधा पिण्डः । सविधाः सपिण्डाः । सपिण्डशब्देन समानोदकादयो लक्ष्यन्ते । मृतस्य सपिण्डादीन् पुरुषान् न स्पृशेयुरित्यर्थः । मरणाशौचस्योक्तत्वाद् मृतशब्दोऽनर्थक इति चेद्, न । मरणाशौच एव सपिण्डानामस्पृश्यत्वमिति ज्ञापनार्थत्वात् । अनेनैव विश्लिष्टा इति सिद्धे तद्ग्रहणात् समानोदका अपि लक्ष्यन्त इत्युक्तम् । ते मृतसविधनरा दाहकं न स्पृशेयुरिति योज्यम् । अनेन दाहकस्याशौचाधिक्यमस्तीति ज्ञापितम् । तथा चाह—

"सूतकाद् द्विगुणं शावं शावाद् द्विगुणमार्तवम् ।
आर्तवाद् द्विगुणा सूतिः मृतेश्च शवदाहकः ॥"

इति । चशब्देनान्योन्यमिति वक्ष्यमाणमपकृष्यते । अन्योन्यं च न स्पृशेयुरित्यर्थः । तथा चाह—

" शावाशौचिनोऽन्योन्यं न स्पृशेयुः"

इति । तेषां विश्लिष्टानां न भुक्तिः । भुक्तिप्रतिषेधादन्नस्येत्यर्थसिद्धम् । केषामन्नस्येत्याकाङ्क्षायामधिकारादेव च मृतस-

विधनराणामिति च सिध्यति । अन्नस्येत्यनेन सम्बन्धार्थे विभक्तिव्यत्यासश्च भवति मृतसन्निधनराणामिति । भुक्तिशब्दः प्रतिग्रहादीनामप्युपलक्षणत्वेन तद्दानादीनामप्युपसङ्ग्रहणार्थः । तथा च मनुः—

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥"

इति । अतोऽनधिकारलक्षणत्वं भवति शावेऽङ्गस्पर्शायोग्यत्वं च । अन्योन्यं च न भुक्तिः सपिण्डानाम् । ननु चैतद् विरुद्धं—

"द्वितीया(त्) प्रभृत्येकोपचयेन चतुष्षष्टिं ब्राह्मणान् भोजयेत् (सा ? आ)दशमादह्नः"

इति,

"ज्ञातिभिः सह भोक्तव्यमेतत् प्रेतस्य दुर्लभम्"

इति च विधेः । न विरोधः । रागप्राप्तस्य निषेधो न शास्त्रप्राप्तस्येति । अतः स्वेच्छयान्योन्यस्य गृहे न भुञ्जीत । एवकारेण भोजने दोषगौरवं दर्शयति । तथा चाह—

"आशौचिनां तु भुक्त्वान्नं चरेत् कृच्छ्रं विशुद्धये"

इति । दशरात्रादि कदाप्रभृति ग्राह्यमित्याशङ्कायां मरणनिमित्तत्वान्मरणप्रभृति युक्तमिति न्यायसिद्धमेवानुवदति विशेषविधानार्थं— **मरणदिवसतोऽनाहिताग्नेर्दशाहमिति** । मरणदिवसमारभ्य । येनाग्न्याधानं न कृतं, तस्य दश दिना-

(स्या ? न्या)शौचं ग्राह्यम् । अनुवादप्रयोजनं तु यस्याहिताग्नेरग्न्यभावे च मरणदिवसे कथञ्चित् संस्कारो न सम्भवति, तस्यापि मरणप्रभृत्येवाशौचं ग्राह्यमिति । अनाहिताग्नेरित्युक्तत्वादाहिताग्नेः कथं स्यादित्याशङ्क्याह — **आशौचं त्वाहिताग्नेर्दहनदिवसत** इति । आहिताग्नेस्तु, येनाग्न्याधानं कृतं तस्य विशेषोऽस्ति दहनदिवसमारभ्य तस्याशौचं ग्राह्यमिति । न्यायोऽप्यत्र—आहिताग्नेस्तदैव मृतिरपि, यदा पात्रसादनयुक्तोऽग्निदाहः । तथा चार्थवादश्रुतिरपि —

"यज्ञायुधी ह वा एष याजमानोऽञ्जसा स्वर्गं लोकमेति"

आहिताग्नेर्दहनदिवसत इत्येतावतैव सिद्धत्वात् तुशब्दस्यान्यो वार्थस्तदनुष्ठाने विशेषोऽस्तीति । तथा च —

"आहिताग्निर्यदाशौची सन्ध्ययोरुभयोरपि ।
स्नात्वाग्निहोत्रं जुहुयादिति धर्मविदो विदुः ॥"

इति । शावाशौचस्येतरस्पर्शायोग्यत्वं चोक्तम् । तत् सदा प्राप्नोतीत्याशङ्क्याह — **सञ्चयादूर्ध्वमित्यादि** । अस्थिसञ्चयनादूर्ध्वमितरस्पर्शे तस्याशुचित्वं नास्तीत्यर्थः । तर्हि यदा दशाहादेरन्तरास्थिसञ्चयनं नास्ति, तदा सर्वदैवास्पृश्यत्वं प्राप्नोतीत्याशङ्क्याह — **तदपि निगदितमित्यादि** । तत् सञ्चयनं ब्राह्मणानां चतुर्थे दिवसे निगदितं विहितम् । अपिशब्दो 'दशमदिनमुख' इत्युत्तरत्र वक्ष्यमाणपदाद् दिनमुख इत्यस्याध्याहारं द्योतयति । चतुर्थदिनमुखे चतुर्थदिवसस्य पूर्वाह्णे कर्तव्यमित्यर्थः ।

ब्राह्मणस्य चतुर्थदिनमुखं सञ्चयनस्य कालः । निगदितशब्देन लक्षणोच्यते । अतः काललक्षणार्थत्वात् सञ्चयनकालादर्वागङ्गस्पर्शायोग्यत्वं न परतोऽपीत्यर्थः ॥

इति तृतीयश्लोकः ।

---

ब्राह्मणस्य सञ्चयने कालमुक्त्वेदानीमितरेषां सञ्चयनकालमाह—

शूद्रे राजन्यवैश्ये दशमदिनमुखे
पञ्चमे सप्तमेऽह्नि
प्राप्तेऽन्यस्मिन् समाने प्रथमदिनवशं
रात्रिशेषे द्विरात्रम् ।
पूर्वाशौचेऽन्यपाते त्रिदिनमतिदिने
सङ्गवे न व्यतीते
दूराशौचान्तराले यदि विदितमभू-
च्छेषमात्राच्छुचिः स्यात् ॥ ४ ॥

**शूद्रे राजन्यवैश्य** इत्यादि । शूद्रे प्रेते दशमदिनस्य पूर्वाह्णेऽस्थिसञ्चयनं कार्यम् । क्षत्रिये प्रेते पञ्चमदिनस्य मुखेऽस्थिसञ्चयनम् । वैश्ये प्रेते सप्तमदिनस्य मुखे । मुखशब्दस्याधिकारात् प्रसङ्गः । ननु च ब्राह्मणस्यैवाशौचमुक्तम् । अत इतरेषां सञ्चयनकालः कस्मादुक्तः । सञ्चयनकालोपदेशादेव तेषामाशौचकालोऽप्यर्थादुक्तो भवतीत्यदोषः । तत् कथमिति चेत्,

"सर्वेषामात्मीयाशौचतृतीयांशेऽस्थिसञ्चयनं कार्यम्"

इति वसिष्ठवचनात्। अतः शूद्रस्य मासमाशौचमुक्तं भवति, क्षत्रियस्य पञ्चदशाहं, वैश्यस्य विंशतिरात्रमिति। कस्मात् पुनर्ब्राह्मणसञ्चयनकालाभिधानानन्तरं क्षत्रिय(स्य ?)वैश्ययोरनुक्त्वा शूद्रस्य सञ्चयनमुक्तम्। तत् संस्कारे दिक्क्रमविवक्षयेत्यदोषः। तथा संस्कारे दिक्क्रमं यम आह—

"प्रेतीभूतमलङ्कृत्य ब्राह्मणं पूर्वतो हरेत्।
शूद्रं प्रेतमलङ्कृत्य दक्षिणा दिशि निर्हरेत्॥
प्रेतं तु क्षत्रियं वैश्यं हरेत् प्रत्यगुदग्दिशोः॥"

इति। अथवा क्रमभेदस्येदं प्रयोजनं— ब्राह्मणस्यैव कलौ युगे जातेर्निर्णयः। शूद्रस्यापि तदनुकृतिरस्ति। क्षत्रियवैश्ययोः केवलजातिर्नो(ति?स्ति)। तथा निर्णयकारेणोक्तम्—

"इदानीमन्यवर्णानां स्वरूपापरिनिश्चयात्।
अस्माकं ब्राह्मणाशौचव्यवस्थाविषयः श्रमः॥"

इति। तर्हि कस्मात् क्षत्रियवैश्ययोरुक्तमिति चेत्, तयोरपि मातृजात्या व्यपदेशोऽस्तीति। अथवा क्षत्रियवैश्याशौचप्रवेशार्थं शूद्र(:) ब्राह्मणानन्तरमुक्तः। तथा चाह—'अर्धमासमेक' इति,

"वैश्यवच्छौचकल्पः स्याच्छूद्राणां न्यायवर्तिनाम्"

इति च। राजन्यवैश्य इति समासनिर्देशस्तयोरपि कल्पान्तरप्रवेशार्थः। तथा च गौतमः—

"एकादशरात्रं क्षत्रियस्य, द्वादशरात्रं वैश्यस्य"

इति । एवं मरणाशौचमुक्तम् । तत्रैकस्यान्तरालेऽन्यदाशौचमागच्छेद् यदि 'प्रतिनिमित्तं नैमित्तिकमावर्तनीयमि'त्यनेन न्यायेन सकलस्य ग्रहणे प्राप्त आह— **प्राप्तेऽन्यस्मिन् समान** इत्यादि । एकस्मिन्नाशौचे समाने जातितः कालतश्च तुल्ये प्राप्ते । जातितः साम्यं मरणे मरणमेव, न जननम् । कालतः साम्यं दशाहे दशाह एवेत्यादि । समान इत्युक्त्वान्यायतो गुरुणा लघोर्गमनं सिद्धं, यथा गुरुणा पाषाणेन बद्धस्य लघोः कुसुमस्य गमनम् । तथा चाह—

"शावेन सूतकं गच्छेन्न सूतिः शवशोधिनी"

इति (च?) । प्रथमदिनवशं पूर्वाशौचेनोत्तराशौचं गच्छति । पूर्वदिनवशमित्यनुक्त्वा प्रथमदिनवशमिति वदन् गुरुणा लघोरपगमनं न्यायसिद्धं (मन्यते) । स्पष्टजातिकालनिमित्तगौरवयोः कालनिमित्तस्य मुख्यत्वं, यथा सङ्कुचितक्षत्रियमहाविस्तारशूद्रयोः शूद्रेण सह क्षत्रियस्य गमनम् । तथा च सङ्कुचितं शावं विस्तीर्णेन सूतकेन गच्छेद् नान्यथा । प्राप्ते समान इत्युक्त एवान्यत्वे सिद्धेऽन्यस्मिन्नित्युक्तेरयमभिप्रायः— यद्याशौचनिमित्तस्योत्तरस्याशौचिनान्यत्वमिति । यद्यनन्यत्वं तर्हि न प्रथमदिनवशम् । यथा पितापुत्रयोः । तथा च मन्त्रवर्णः—

"पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्याः पुनर्नवो भूत्वा दशमे मासि जायते ॥"

इति । यथा च दम्पत्योः । तथा च श्रुतिः—

"अर्धो ह वा एष आत्मनो यत् पत्नी"

इति । अतः पितापुत्रयोर्दम्पत्योश्चाशौचं न पूर्वशेषेणैव गच्छेत्। तथा च स्मृतिः—

"मातापित्रोस्तु दम्पत्योः सूतके स्वसुतस्य च ।
दशाहेनैव शुद्धिः स्याच्छेषन्यायो न विद्यते ॥"

इति । तत्र मातापित्रोराशौचमन्योन्यस्मिन्नापतेद् यदि, तर्हि गुरुत्वातिरेकान्मातुस्तदाशौचस्य पितुराशौचेन नापगमः। पितुराशौचं मातुराशौचेन गच्छेच्च । तथा चाह—

"मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥"

इति । तुशब्दस्य त्रिरात्रादधिकं पक्षिणी ग्राह्येत्यर्थः । अर्धाधिकं चतुरहमाशौचमित्यर्थः । अन्यस्मिन् समान इति विसमासोक्तिरपेक्ष्यभेदाद् आशौचिनमपेक्ष्यान्यत्वम् आशौचमपेक्ष्य समानत्वमिति । अथवान्या व्याख्या—समाने प्राप्ते प्रथमदिनवशं पूर्वाशौचशेषेण शुद्धिः । अन्यास्मिन् विषमे प्राप्ते प्रथमदिनवशम् । प्रथमो मुख्यः । गुरुरित्यर्थः । गुरुलघ्वाशौचयोरन्योन्यपाते लघ्वाशौचं गुर्वाशौचेन गच्छेत् । तथाह— 'गुरुणा लघु शुध्येते'ति । अथवान्यस्मिन्नन्यनिमित्ते गुरुदिनवशम्, एकनिमित्ते विषमे च सूतके शावे च अगुरुदिनवशं पूर्वदिनवशम् । अतः सूतकेन शावं गच्छेत् । तथा च स्मृतिः—

"एक एव निमित्तं चेद् भवेत् सूतकशावयोः ।
तच्छावं सूतकेनैव तेन पित्रोरपि व्रजेत् ॥"

इति । अन्तःपाते पूर्वाशौचेनोत्तराशौचं गच्छेदित्युक्ते विशेषमाह— **रात्रिशेष** इत्यादि । पूर्वाशौचे रात्रिशेषे अन्यपाते दशमदिनेऽन्यपाते रात्रिद्वयं ग्राह्यम् । परतः पूर्वाशौचेऽतिदिने दशमदिनेऽप्यतिक्रान्ते सङ्गवे न व्यतीतेऽन्यपाते त्रिदिनम् । सङ्गव आशौचापगमकालः,

"अघभाजः सङ्गवे स्नात्वा ग्रामं प्रविशेयुः"

इति वचनात् । सङ्गवः सम्यगुदयः । तथा च श्रुतिः—

"आहवनीयेन रश्मीन् सन्दधाति"

इति । दशमदिनस्य रात्रेः पूर्वभागयोरतिक्रान्तयोः सङ्गवात् प्रागापतेच्चेत् परतस्त्रिरात्रं गृह्णीयात् । तथा चाह—'प्रभाते तिसृभिरि'ति । अन्तःपाते त्रिदिननियमाद् द्विरात्रशेषे पूर्वाशौचे परत एकरात्रं गृह्णीयादिति च सिद्धम् । किमन्तःपाते ज्ञानावधि त्रिरात्रम्, उत सत्तावधीत्याशङ्क्याह—**दूराशौचान्तराल** इत्यादि । दूरत्वादविदितस्य सतः पूर्वाशौचस्यापगमात् प्राग् विदितस्य च अन्तराले मध्ये उत्तराशौचं विदितं भवति चेत् । पतितमिति वक्तव्ये विदितमित्युक्तत्वादतिक्रान्तैकदेशं पूर्वमविदितं (स ? य)द्युत्तरमाशौचं विदितं भवति, तदा शेषमात्राच्छुचिर्भवति । एतदुक्तं भवति—यदि पूर्वाशौचे सम्बद्धैकरात्रमुत्तराशौचं विदितं भवति तदा दिनद्वयेन, यदि सम्बद्धद्विरात्रं

विदितं भवति तदैकरात्रेण, यदि सम्बद्धत्रिरात्रं विदितं भवति तदा शेषमात्राच्छुचिः स्यात्। सत्तोपाधि त्रिरात्रं, न ज्ञानप्रभृतीत्यर्थः। यद्याशौचापगमात् प्रागस्मिन्निदमापतितमिति परामर्शो भवति, तदा शेषन्यायेन शुद्धिर्भवतीत्यर्थः। न्यायेन निरूपणप्रकार उक्तः। दूराशौचान्तराले विदितमिति वक्तव्ये यदि विदितमिति वाचोयुक्तेरयमभिप्रायः—कतिचिद् विषया उक्ता न सर्वे। आनन्त्याद् विषयाणाम्। अनुक्तेषु विषयेष्वनेन मार्गेण न्यायतो निरूप्य कल्पनीयमिति ॥

इति चतुर्थश्लोकः।

---

सपिण्डानामाशौचमुक्त्वेदानीं समानोदकानामाशौचमाह—

स्नानं प्राग् दन्तजातेर्दिनमुपनयनात्
त्रीणि पश्चात् समक्षं
सद्योऽतीते श्रुतं चेत् त्रिदिनदिनविधौ
शुद्धिरेकोदकानाम्।
पित्रोस्तत्सोदराणामुभयतनुजयो-
स्तद्गुरूणां प्रयाणे
प्रत्तायाः पक्षिणी स्यादभिहितमरणे
सैव गच्छेत् पुमांसम् ॥ ५ ॥

स्नानं प्राग् दन्तजातेरित्यादि। संवत्सरादर्वाङ् मृते समानोदकानां स्नानेन शुद्धिर्भवति। दिनमुपनयनात् प्राग्

अष्टमाब्दात् प्राङ् मृते एकदिनेन शुद्धिर्भवति । उपनयनकालात् तत्कर्मणो वा उपरि दिनत्रयेण शुद्धिः समक्षम् । अतिक्रान्ताशौचं नास्ति समानोदकानाम् । यदि तस्मिन्नेव काले ज्ञानं तदैवाशौचं, न सपिण्डवदतिक्रान्तमपीत्यर्थः । स्त्रीणां मृतावष्टमाब्दात् प्राक् स्नानम् । विवाहकालात् तत्कर्मणो वा प्राग् दिनम् । अतः परं प्रत्तानां त्रिदिनमिति । किं सपिण्डानामाशौचापगमात् प्राक् समानोदकानामाशौचं भवति उत नेत्याशङ्क्याह—सद्योऽतीते श्रुतं चेदिति । स्वाशौचकालेऽतिक्रान्ते यदि श्रुतं भवति, तर्हि स्नानमात्रेण शुद्धिः स्यात् । इदानीं समानोदकानां कर्मजन्यमाशौचमाह—त्रिदिनेत्यादि । त्रीणि त्रिदिनानि एकं दिनं च त्रिदिनदिनं, तस्मिन् त्रिदिनदिने । दशाह इत्यर्थः । दशाहेऽतीते शुद्धिर्भव(ति।) विधौ संस्कारे कृते । विधिहेतौ त्रिदिनदिने इति विग्रहः । कारणे कार्यवदुपचारात् । संस्कारे कृते समानोदकानां दशरात्रमाशौचमित्यर्थः । तथा च मनुः—

"रज(ना ? न्या)ह्नैव चैकेन त्रिरात्रैरेव च त्रिभिः ।
प्रेतस्पृशो विशुध्यन्ति त्र्यहात्तूदकदायिनः ॥"

इति । उदकदायिनस्त्र्यहाच्छुध्यन्ति, प्रेतस्पृशस्तु दशरात्रेणेति तस्यार्थः । त्रिदिनदिनविधौ शुद्धिरित्यस्यान्यो वार्थः—त्रिदिनेषु दिनविधौ कृते । दिनविधिः श्राद्धं, 'रात्रौ श्राद्धं न कुर्वीते'ति वचनाद् रात्रौ निषेधात् । पिण्डकर्तॄणां केनापि निमित्तेन

संस्कारमकुर्वतां समानोदकानामिदम् । तथा चाह—

"प्रथमे त्रीन् द्वितीयेऽह्नि चतुरस्त्रींस्तृतीयके ।
पिण्डानेवं प्रदद्यात् तु सोदकः पिण्डदो यदि ॥"

इति । त्रीनिति त्रिदिनसम्बन्धिनः, चतुर इति चतुर्दिनसम्बन्धिनः, प्रथमद्वितीयदिनयोः । एवं तृतीयेऽपि त्रिदिनसम्बन्धिन इत्येवं त्रिदिनेष्वेव दशाहसम्बन्धिनः पिण्डान् कुर्यात् । एवमुदकक्रियाश्च कुर्यात् । पिण्डोदकयोः सहभावात् । चतुर्थेऽहन्याशौचेऽपगते प्राग् दशाहात् तूष्णीमासित्वा एकादशेऽहनि पिण्डं च कुर्यादिति । त्रिदिनदिनविधावित्यस्यान्या व्याख्या—त्रिदिनानां दिन एव विधौ । त्रिदिनानि त्रिदिनचोदितानि कर्माणि । तेषामेकस्मिन्नेव दिनेऽनुष्ठानेऽपि शुद्धिरिति । अस्यायं विषयः—समानोदकानां पिण्डकर्तॄणां त्रिदिनेष्वतीतेषु यदि ज्ञानं भवति, तदा त्रिदिनचोदितानि कर्माणि दिन एव कृत्वा स्नात्वा पिण्डं च कुर्यादिति । अयमर्थो न्यायत एव प्राप्तः । अतीतस्याशौचकालस्यासम्पाद्यत्वात्, पिण्डोदकक्रियाणामवश्यानुष्ठेयत्वाच्च । अतो न वक्तव्यमिति चेत् । न । आशौचस्यातीतत्वात् तच्चोदितकर्माण्यपि निवर्तेरन्, उत तदनुष्ठानार्थं त्रिदिनमाशौचं ग्राह्यमिति सन्देहः स्यादिति तद्व्यावृत्त्यर्थं न्यायसिद्धमेवानुवदतीति । सपिण्डसमानोदकयोराशौचमुक्त्वेदानीं बान्धवाशौचमाह—**पित्रोस्तत्सोदराणामित्यादि** । मातापित्रोः (म ?) तयोः सोदराणां भ्रातॄणां पितृव्यपितृष्व(स्रीया ? स्रा)दीनां मातुलमातृष्वस्रादीनां च, उभयतनुजयोः मातृपितृवर्गपुत्रयोः मातुः मातु-

भ्रातॄणा च पुत्राणां, पितुः पितुर्भ्रातॄणां च पुत्राणां, तद्गुरूणां मातापित्रोर्गुरूणां पितामहपितामहीमातामहमातामहीनां प्रयाणे प्रत्तायाः स्त्रियाः पक्षिणी आशौचं स्यात् । पक्षिणी पक्षद्वयवती रात्रिः । पार्श्वद्वये दिनवती रात्रिः । अहश्च रात्रिश्च दिवसपर्यायौ ।

"अहश्च रात्रिश्च तथा अहोरात्रस्य वाचकौ"

इति नैखण्टुकदर्शनात् । पक्षिणी त्रिरात्रमित्यर्थः । अथवा पक्षिणी नवतिनाडिका अहर्द्वयमध्यगता इति केषाञ्चिन्मतं स्यात् । संस्कारेऽपि त्रिरात्रमेव बान्धवानाम् । तथा चाह—

"असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥"

इति । तत्सोदराणामिति वचनाद् बीजयोनिसंबन्धरहितानां मातुलादीनामेकदिनमाशौचम । तथा च याज्ञवल्क्यः—

"अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।
गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥"

इति । अत्र मातुलो बीजयोनिसंबन्धरहित उक्तो गुर्वादिभिः सहपाठादिति भाष्यकाराणां व्याख्या । तत् किं बान्धवाशौचं स्त्रीणामेव उत पुंसामपीत्याशङ्क्याह— **अभिहितमरणे सैव गच्छेत् पुमांसमिति** । अभिहितानां पित्रादीनां मरणे सा पक्षिणी पुमांसमपि गच्छेत् । पुंसामपि सापिण्ड्याभावे पक्षिण्याशौचं भवति । सेति स्त्रीणामुक्ताशौचपरामर्शः । स्त्रीणां हि सपिण्डता नास्ति पित्रादिभिः,

"एकत्वं सा गता भर्तुः पिण्डे गोत्रे च सूतके"

इति वचनात्। तदाशौचपरामर्शात् सापिण्ड्याभाव एव स्यादिति। तथा चाह—

"मातामहीपितामह्योर्मातर्यासामपत्यके।
तदपत्येष्वसापिण्ड्ये पक्षिणी स्यात् परस्परम्॥"

इति। अथवा सेति स्त्रीणामाशौचपरामर्शः प्रत्तशब्दस्य पुंसोऽपि विशेषणत्वज्ञापनार्थः। यथा प्रत्तायाः स्त्रियाः पक्षिणी, तथा प्रत्तस्य पुंसोऽपि पक्षिणी स्यादिति। द्विविधं हि पुंसां प्रदानम्। अयमावयोः पुत्र इति संवादेन यद् दानं तदेकम्। अयं तवैव पुत्र इति संवादेन यद् दानं तदन्यत्। तथा प्रत्तस्य पुंसः। एवकारेण अतीतगो(त्रा)द् उपनयनात् प्रागप्याशौचं व्यावर्त्यते। अतीताशौचव्यावृत्तौ सैवेत्यन्वयः। विवाहोपनयनयोः प्रागाशौचव्यावृत्तौ प्रत्ताया एव प्रयाणे पित्रादीनां पक्षिणीत्यन्वयः, विवाहोपनयनयोश्च समानत्वादिति। तथा चाह—

"पक्षिणी योनिबन्धूनां नातिकालजसूतके।
नोपनीतेरधः पुंसो न पाणिग्रहणात् स्त्रियाः॥"

इति। अभिहितमरण इत्यादेरन्यो वार्थः—अभिहितानां पित्रादीनां मरणे। प्रत्ताशब्दः स्त्रीविशेषणत्वेन श्रुतोऽप्यधिकारात् पुंसोऽपि विशेषणम्। तदन्वययोग्यतार्थं द्वितीयान्तो द्रष्टव्यः, प्रत्तं पुमांसमिति। प्रकर्षेण दत्तः प्रत्तः। तथा च भगवतः पाणिनेः स्मरणं—'दो दद्घोः' (७. ४. ४६) इति प्रकृत्य

'अच उपसर्गात्तः' (७. ४. ४७) इति । प्रकर्षेण दानम् एकामुष्यायणतया यद् दानं तत् प्रत्तेतव्यम् । तदुक्तं षट्त्रिंशन्म(ते)—

"उपाध्यायांस्तथाचार्यान् बान्धवानुभयोरपि ।
ऋत्विजश्च तथा राज्ञः प्रकृतीर्नृपसन्निधौ ॥

समानाय्य यथाशास्त्रमपुत्रो विधिवद् द्विजः ।
मातृतः पितृतः पुत्रं गृह्णीयाद् भार्यया सह ॥

तस्मिन्नेव दिने पिण्डान् निर्वपेत् पितुरात्मनः ।
सर्वाणि प्रेतकार्याणि मातुश्चैवाविशेषतः ॥

तद्गोत्राणां तु सर्वेषां श्राद्धं कृत्वा यथाविधि ।
य एवं पुत्रतां यात आदातुः स सुतो भवेत् ॥"

इति । एवमेकामुष्यायणतया प्रत्तं पुमांसं सैव पक्षिणी गच्छेत् प्राप्नुयात् । एवकारेण सपिण्डसामान्येन प्राप्तदशाहपिण्डदानादिप्रतिषेधः क्रियते । ततो द्व्यामुष्यायणेन आशौचपिण्डादि द्वयोर्यथाविधि कर्तव्यम् । तथाह मनुः—

"आशौचमेतच्छ्राद्धं च पित्रोः कुर्यात् तु दत्तकः ।
तत्सपिण्डमृतौ किञ्चिदाशौचं नोदकं तथा ॥"

इति । भृगुरप्याह—

"पिण्डांस्तु निर्वपेत् पुत्रो जनकस्य यथाविधि ।
गृहे स्थितोऽपि वा नित्यमथान्यत्र गतोऽपि वा ॥"

इति । बौधायनोऽप्याह —

“द्विपितुः पिण्डदानं स्यात् पिण्डे पिण्डे च नामनी ।
त्रयश्च षण्णां पिण्डाः स्युरेवं कुर्वन्न रिष्यति ॥”

इति । एवमादयो ह्यामुष्यायणविषयतया द्रष्टव्याः ॥

इति पञ्चमश्लोकः ।

---

मरणनिमित्तमाशौचमभिधायेदानीं प्रसङ्गतः क्रियानिमित्तमाशौचमाह —

वोढुः सार्धं सपिण्डैर्वसनकटकृती
कुर्वतः प्रेतवासे
तेभ्योऽन्यस्य त्रिरात्रं दशदिनमशने
तस्य चान्द्रायणं च ।
हीने तैरेकरात्रं बहिरुपवसतो
वासरेऽस्तं गतेऽर्के
स्नानं दृष्टे तु तस्मिन् निशि यदि वहने
धर्मतः स्नानमेव ॥ ६ ॥

वोढुः सार्धमित्यादि । सपिण्डादिभिः सह वह(नं)व(च?स)नं संस्कारं वा कुर्वतः । तेभ्योऽन्यस्य सपिण्डादिभ्योऽन्यस्य । (त्रि?अत्र) सपिण्डशब्दः समानोदकबान्धवयोरुपलक्षणम्, अन्यस्येत्येतावतैव सिद्धे तेभ्य इति वचनात् । प्रेतस्य मृतस्य गृहे वसनं शयनादि कटकरणं चानु(ष्ठितं?ति-

ष्ठतः) त्रिरात्रं दिनत्रयमाशौचम् । तस्मिन्नेव भोजनं कुर्वतो दशाहमाशौचं, तस्य चान्द्रायणमपि प्रायश्चित्तम् । चशब्दात् छर्दनविरेचनादि । तथा च गौतमः—

"अभोज्यभोजने निष्पुरीषीभावः"

इति । तत्रच्छर्दनविरेचने कृत्वा दशाहेऽतीते पुनश्चान्द्रायणं च कुर्यादित्यर्थः । अभ्यासे प्रायश्चित्तस्यापि गौरवं कल्प्यम् । वसनकटकरणाशनेषु कृतेषु आशौचं प्रायश्चित्तमप्युक्तम् । कटकरणे कथं स्यादित्याशङ्क्याह—**हीने तैरित्यादि** । तैर्हीने वसनकटकरणाशनाना समासेनाकरणे । वसनकटकरणयोः समासकरणे त्रिरात्रस्योक्तत्वाद् वसनमेव कुर्वत एकाहमिति । हीने तैरित्यस्यान्या व्याख्या—वसनाद्यकरणे एकदिनमाशौचं, संस्कारानन्तरं प्रेतगृहमगत्वान्यत्र वसति चेदिति । यदि संस्कारानन्तरं प्रेतगृहमगत्वान्यत्र बहिरेव तिष्ठेत्, तदा किमिति चेत्, तदाह—**बहिरित्यादि** । वासरे दिवसे यदि संस्कारः, तदादित्येऽस्तं गते स्नात्वा शुध्येत् । रात्रौ चेदुदित आदित्ये स्नात्वा शुध्येत् । बहिरुपवसत इति पाठः । बहिरेव तिष्ठतः, उपवासं च कुर्वत इति तस्यार्थः । दृष्टार्थे वहनादाविदम्, अदृष्टार्थे तु वक्ष्यमाणत्वात् । तर्हि अदृष्टार्थे कथमिति चेत्, तदाह—**वहन इत्यादि** । धर्मतो वहने धर्महेतुके वहनादौ स्नानमेव । एवकारेणाशौचामङ्गलाधर्माणामप्रसङ्गं ज्ञापयति, प्रत्युत धर्मोऽस्तीति च । तथा च स्मृतिः—

" अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते ॥"

इति ॥

इति षष्ठश्लोकः ।

---

आशौचमभिधायेदानीमाशौचधर्मानाह —

खट्वारोहोऽङ्गपेषः सकलशवदिने
दारवासश्च नेष्टो
वासे चान्द्रायणं स्यादनुगमनकृते
स्नानमाज्याशनं च ।
कृच्छ्रं शूद्रानुयाने त्रिदिनमपि मृता-
वात्मकौक्षेयकादि-
क्षोणीपप्रायदर्वीकरदहनमही-
देवसञ्जीवनाद्यैः ॥ ७ ॥

खट्वारोह इत्यादि । आशौचदिनेषु खट्वारोहं वर्जयेत् । खट्वारोहः खट्वायां शयनम् । अङ्गपेषः गात्रमलापकर्षणम् । तं च वर्जयेत् । दारवासो दारैः सह वासः, स्त्रीणामासेवनम् । तं च वर्जयेत् । ननु च सूतकस्याप्रकृतत्वाच्छवदिन इति न वक्तव्यम् । न । उत्तरत्र सूतके शावाशौचातिदेशात् तद्धर्माणामपि प्रवेशो भवतीति । तर्हि शवदिन इत्येतावतैव सिद्धे सकलग्रहणमनर्थकमिति चेत्, सम्पूर्णशवदिने दोषातिरेकज्ञाप-

नार्थत्वाददोषः । सम्पूर्णता च गुरुत्वप्रयुक्ता पिण्डकर्तृताप्रयुक्ता च । चशब्दो यमान्तरग्रहणार्थः । तथा चाह —

"आदर्शं दन्तकाष्ठं च दूर्वालम्भप्रसाधने ।
अनावृतस्मितं चैव शावाशौची विवर्जयेत् ॥
लवणं मधु मांसं च क्षारं चन्दनसर्पिषी ।
द्विर्भोजनं तथात्याशं वर्जयेदघभाङ् नरः ॥"

नेष्टो मन्वादिभिः प्रतिषिद्धः । तेषामनुष्ठाने प्रायश्चित्तमप्युक्तम् —

"यद्याशौचे निषिद्धानि मोहात् प्रकुरुते नरः ।
उपोष्यैकाहमब्लिङ्गैर्जपन्नेनो व्यपोहति ॥"

इति । दारवासस्य दोषगौरवान्मुखतः प्रायश्चित्तमाह — **वासे चान्द्रायणं स्यादि**ति । सकृत् सेवने चान्द्रायणम् । अभ्यासवशाच्चान्द्रायणस्याप्यावृत्तिरिति स्याद्ग्रहणम् । सपिण्डादीनामाशौचं तद्धर्ममप्युक्त्वा विश्लिष्टानां शवानुगमनेऽपि दोषमाह — **अनुगमनकृत** इत्यादि । संस्कारार्थं नीयमानस्य शवस्यानुगमनक्रियायां स्नानम् । आज्याशनं घृतप्राशनम् । *तच्च कायाप्लवनमात्रम् । चशब्दो धूमप्रवेशनार्थः । स्नात्वा धूपनं कृत्वा घृतप्राशनं च कर्तव्यम् । सर्वेषां सजातीयानुगमन एतत् । ब्राह्मणस्य क्षत्रियानुगमने एकाहमाशौचं गृहीत्वैतत् प्रायश्चित्तं च कर्तव्यम् । ब्राह्मणस्य वैश्यानुगमने त्र्यहमाशौचं गृहीत्वैतत् प्रायश्चित्तं च कर्तव्यम् । एतच्चशब्देनाक्षिप्तम् । दोषगौरवा-

* तच्चेत्यादि स्नानविवरणमिव भाति ।

न्मुखतः शूद्रानुगमन आह — **कृच्छ्रं शूद्रानुयाने त्रिदिन- मपीति** । अयमर्थः — ब्राह्मणः शूद्रं प्रेतमनुगम्य त्र्यहमाशौचं गृहीत्वा चतुर्थेऽहनि स्नात्वा धूपनं घृतप्राशनं च कृत्वा पुनः कृच्छ्रं च कुर्यादिति । अपिशब्दः पूर्वं क्षत्रियवैश्ययोरनुगमने एकाहं त्र्यहमाशौचप्रवेशार्थः, शूद्रानुगमनेऽपि त्रिदिनमित्य- न्वयः इति । क्षत्रियस्य वैश्यानुगमने एकाहमाशौचं स्नाना- दीन्यपि, अधिकारान्न्यायाच्च । शूद्रानुगमने त्रिरात्रमाशौचं गृहीत्वा स्नानादीनि कृच्छ्रार्धं च । वैश्यस्य शूद्रानुगमने त्रि- रात्रमाशौचं स्नानादीनि कृच्छ्रपादश्च द्रष्टव्यः । इदानीं सा- पिण्ड्ये सति यत्राशौचादि न स्यात्, तन्निमित्तमाह — **मृता- वित्यादि** । मृतौ मरणे । आत्मशब्दो बुद्ध्यर्थः । कौक्षेयकः खड्गः । आदिशब्देन क्षुरिकादीनि शस्त्राण्यात्महननसाधनान्यु- च्यन्ते । क्षोणीपः: क्षत्रियः । प्रायो महाप्रस्थानम् । दर्वीकरः सर्पः । दहनोऽग्निः । महीदेवो ब्राह्मणः । सञ्जीवनं जलम् । आद्यशब्दश्चोरव्याघ्रादीनां ग्रहणार्थः । तथा चाह —

"प्रायानाशकशस्त्राग्निविषोद्बन्धोदकैरपि ।
शैलाग्रपतनेनान्यैर्मतिपूर्वात्मघातिषु ॥
दंष्ट्रिश्रृङ्गिमहीपालविप्रैर्मृगसरीसृपैः ।
एवमाद्यैर्हते त्वन्यैः सद्यः शौचं यतावपि ॥"

इति । बुद्धिपूर्वं शस्त्रादिभिर्मरणे । आत्मशब्देनाबुद्धिरपि ल- क्ष्यते । अन्यथा बुद्धिपूर्वमिति विशेषणानर्थक्यात् । क्षत्रिया- दिभिरबुद्धिपूर्वं मरणेऽपि,

"गोब्राह्मणहतानामन्वक्षम्"

इति गौतमवचनात् । गवा ब्राह्मणेन वा हतानां, ब्राह्मणार्थे गोरक्षणार्थे वा हतानामिति तस्यार्थः ।

"प्रायानाशकशस्त्राग्निविषप्रपतनैश्चेच्छताम्"

इति चोक्तम् । अनेन पूर्वत्रानिच्छतामिति सिद्धम् । तथा च याज्ञवल्क्यः —

\$"गोनृपब्रह्महतानामन्वक्षं चात्मघातिनाम् ।
प्रायानाशकशस्त्राग्निविषाद्यैरिच्छतां स्वयम् ॥"

इति । सहस्रस्वामिना चोक्तं —

"प्रायानाशकशस्त्राग्निभृगूद्बन्धविषाशनैः ।
वारिप्रवेशतर्वादिपतनैरिच्छतामपि ॥
अन्वक्षमेषामाशौचं हतानामप्यनिच्छताम् ।
गोनृपाशनिचण्डालडिम्बविप्राहिदंष्ट्रिभिः ॥
न श्राद्धतोयदानाग्निसंस्कारादीन् समाचरेत् ।"

इति ॥

इति सप्तमश्लोकः ।

---

एवमेभिर्मरणे किं पिण्डोदकादि कर्तव्यम् उत नेत्याशङ्क्याह —

**श्राद्धं तोयं कृशानुर्बलिकटकरणे**
**दुःखनामाश्रुपाता**

---

\$ मुद्रितयाज्ञवल्क्यस्मृतौ "हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम्" इत्येवंरूपमर्धं प्रायेत्यादिरहितं दृश्यते ।

न स्युः स्पृष्टिप्रदाहानुगमनवहने
तप्तकृच्छ्रेण शुद्धिः ।
जन्मन्येकोदकानां त्रिदिनमवगमे
पिण्डभाजां दशाहं
सद्योऽतीते श्रुतं चेद् द्वयदिनसमितौ
प्रेतवन्मातुरन्यत् ॥ ८ ॥

श्राद्धं तोयमित्यादि । श्राद्धमेकादशपिण्डादिसपिण्डीकरणान्तं यत्, तदुच्यते । तोयमुदकक्रिया । कृशानुरग्निः। तेन संस्कारो लक्ष्यते । बलिरन्तर्दशाहे यो बलिः सायं प्रातः क्रियते । एतेऽदृष्टार्थाः । कटकरणं लौकिकाचारेण प्रसिद्धम् । दुःखं (न ? दुः)खभावना गुणस्मरणेन । नामशब्देन नाम चोच्चार्य रोदनमुच्यते । अश्रुपातो नयनत आस्रपातनम् । एतेषां दुर्निवारत्वात् कामतो न कार्या इति ज्ञापनार्थं न स्युरित्युक्तम् । एतेषु विशेषोऽस्ति । अदृष्टार्थेषु भ्रान्त्या क्रियमाणेषु नादृष्टार्थं भवति । प्रत्युत प्रत्यवायोऽपि गुरुर्भवति । कटकरणे लौकिकार्थे किञ्चिद् दोषोऽस्ति । दुःखादीनां दुर्निवारत्वात् स्वयमेव जातेषु न दोषोऽस्ति । कामतः कृतेषु किञ्चिद् दोषोऽस्ति । अतो दुःखादीनां निवारणे यत्नः कार्यः । अन्यथा प्राणायामादियत्किञ्चिदनुबन्धानुसारेण प्रायश्चित्तं कार्यम् । स्पर्शनादिषु संस्काराङ्गेषु कृतेषु तप्तकृच्छ्रं कृत्वा शुध्यति । मरणनिमित्तमाशौचमभिधाय यन्निमित्तमरणे आशौचादि न भवति तान्यप्यभिधायेदानीं जननिमित्तमाशौचमाह — जन्मन्येकोदकानामित्यादि । पुंसः

स्त्रिया वा जनने सति एकोदकानां समानोदकानां दिनत्रयमाशौचम् अवगमे ज्ञाने सति। अवगम इति न वक्तव्यम्, आशौचस्यावगमेन विना ग्रहीतुमशक्यत्वात्। न। सत्प्रमाणेन ज्ञाने सति सर्वमाशौचं ग्राह्यं, न ध्वनिमात्रेणेति ज्ञापनार्थम्। तथा च गौतमः—

"तच्चेदन्तः पुनरापतेच्छेषेण शुध्येरन्"

इति। 'अन्तर्ग्रहणं विस्पष्टज्ञापनार्थम्' इति मस्करिभिर्व्याख्यातम्। पिण्डभाजां सपिण्डानां दश दिनान्याशौचम्। ननु च सपिण्डानां प्रथममुक्त्वा समानोदकानामनन्तरं वक्तव्यम्। अतः क्रमभेदोऽनुपपन्नः। न। त्रिदशसङ्ख्ययोस्त्रिसङ्ख्यायाः पूर्वत्वात् तत्सम्बन्धवशात् समानोदकस्य पूर्वमभिधानमिति। अथवा सामान्यं प्रथममुक्त्वा विशेषस्य वक्तव्यत्वात्। कथं समानोदकसपिण्डयोः सामान्यविशेषत्वमिति चेत्। समानोदकानामेव सपिण्डत्वम्। आ दशमात् पुरुषात् समानोदकत्वम्, उदकस्य दातृभोक्तृत्वेन सम्बन्धात्। तेष्वासप्तमात् सपिण्डत्वं, पिण्डस्य दातृभोक्तृत्वेन सम्बन्धात्। तथा च याज्ञवल्क्यः—

"सप्तमाद् दशमाद् वापि ज्ञातयोऽभ्यवयन्त्यपः"

इति। तथान्यत्रापि—

"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥"

इति,

"सप्तमाद्येकतोयत्वं यावत् सम्बन्धितास्मृतिः ।
तावत् प्रवर्तते तच्च कन्यासु च न विद्यते ॥"

इति च । तत्रापि सम्बन्धस्मरणं दशपुरुषलक्षणार्थं याज्ञवल्क्यानुसारेण । स्त्रीणां समानोदकत्वं नास्तीति चेत् । न । स्त्रीणां सप्तमादि समानोदकत्वं नास्ति । चतुर्थादि पञ्चमादि वा समानोदकत्वं,

"षट्सु सप्तसु वा पुंसु सापिण्ड्यं पुरुषाश्रयम् ।
चतुर्षु त्रिषु वा पुंसु कन्यकासु तदिष्यते ॥"

इति वचनात् । यथा पुंसां सप्तसु पुरुषेषु मुख्यं सापिण्ड्यं, तथा स्त्रीणामपि त्रिपुरुषेषु सापिण्ड्यं मुख्यमिति ।

"अप्रत्तानां स्त्रीणां त्रिपुरुषी सपिण्डतेति विज्ञायते"

इति वसिष्ठवचनात् । इति समानोदकानां पूर्वोक्तिरविरुद्धा । उत्पन्नकालज्ञान इदम् । अतीते किमिति तदाह— **सद्य** इति । अतीते किमपि नास्तीत्यर्थः । अतीते इत्युक्तत्वात् समस्तेऽतीते श्रुतं चेत् सद्य एव । शावादेरपि सूतेर्गौरवान्मातुरतिकालजमपि भवतीत्याशङ्कानिवृत्त्यर्थं श्रुतं चेदित्युक्तम् । कथं मातुरतीते श्रवणं सम्भवतीति चेत् । प्रसवक्लेशाद् व्याध्यादिना वा मोहेन वा दशाहे त्वविज्ञाय एकादशे बोधे जाते यदि प्रसवं शृणुयात्, तदापि न कालान्तरे शुद्धिः । किन्तु स्नानादिकर्मणा तदैव शुद्धिरित्यर्थः । सद्य इति च स्नानमभिप्रेत्योक्तम् । अन्यथा नास्तीत्येवावक्ष्यत् । अतो मातापित्रोरतीते पुत्रजन्मनि

श्रुतेऽपि स्नानं कर्तव्यम् । सपिण्डसमानोदकैरतीते स्नानमपि न कर्तव्यमिति विशेषः । अतिकालजाभावाच्छावाद् विशेष उक्तः । अतोऽन्तःपाते पुनरापातः प्रवर्तत इति प्रवृत्त आह—**द्व्यदिनसमितावित्यादि** । द्व(य?)योर्जननाशौचयोः । समितौ सङ्गतौ । प्रेतवत् शावाशौचवत् । शेषन्यायेन शुद्धिः । आपततः सामान्येनातिदेशान्मातापित्रोरपि शेषन्याये प्राप्ते आह—**मातुरन्यादिति** । मातृशब्देन पिताप्युच्यते । 'पिता मात्रा' (१. २. ७०) इत्येकशेषसम्बन्धदर्शनात् । मातापितरौ मुक्त्वेत्यर्थः । सपिण्डाशौचे यदि पुत्रजननं भवेत्, तदा मातापित्रोः सपिण्डाशौचेन न पुत्राशौचं गच्छेत् । पुत्राशौचं परिपूर्णमेव ग्राह्यमित्यर्थः । तथा च स्मृतिः—'सूतकेऽस्य सुतस्य च' । अतिदेशादेव सिद्धे कण्ठोक्तिरपप्रसवादावपि मातुर्नान्येनापगमः । अत एव मातृशब्देन पिता लक्ष्यते इति ॥

इत्यष्टमश्लोकः ।

---

समाप्तं चेदम् ।

---

शुभं भूयात् ।

# Ready for sale.

| | | | |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला - दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhaṭṭa Bâṇa. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णवः (Kâvya) by Nîlakaṇṭha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhaṭṭa with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्तिः (Vyâkaraṇa) by Saraṇadeva. | 2 | 0 | 0 |
| No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshaṇa) by Nîlakaṇṭha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |
| No. 14 — नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. | 2 | 8 | 0 |
| No. 16 — प्रतिज्ञायौगन्धरायणम् (Do.) Do. | 1 | 8 | 0 |
| No. 17 — पञ्चरात्रम् (Do.) Do. | 1 | 0 | 0 |
| No. 18 — नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19 — मानमेयोदयः (Mîmâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. | 1 | 4 | 0 |
| No. 20 — अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |

| | | | |
|---|---|---|---|
| No. 21—बालचरितम् (Do.) Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivarana of Nârayana Pandita (1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswamin (3rd Kanda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (4th, 5th, & 6th Kaṇḍas) | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (6th, 7th & 8th sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary | 0 | 4 | 0 |

***Apply to :—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum.*